॥ श्रीधर्मशास्तुः पञ्चरत्नम् ॥

लोकवीरं महापूज्यं सर्वरक्षाकरं विभुम् ।
पार्वती हृदयानन्दं शास्तारं प्रणमाम्यहम् ॥ १॥

विप्रपूज्यं विश्ववन्द्यं विष्णुशम्भोः प्रियं सुतम् ।
क्षिप्रप्रसादनिरतं शास्तारं प्रणमाम्यहम् ॥ २॥

मत्तमातङ्गगमनं कारुण्यामृतपूरितम् ।
सर्वविघ्नहरं देवं शास्तारं प्रणमाम्यहम् ॥ ३॥

अस्मत्कुलेश्वरं देवमस्मच्छत्रु विनाशनम् ।
अस्मदिष्टप्रदातारं शास्तारं प्रणमाम्यहम् ॥ ४॥

पाण्ड्येशवंशतिलकं केरले केलिविग्रहम् ।
आर्तत्राणपरं देवं शास्तारं प्रणमाम्यहम् ॥ ५॥

पञ्चरत्नाख्यमेतद्यो नित्यं शुद्धः पठेन्नरः ।
तस्य प्रसन्नो भगवान् शास्ता वसति मानसे ॥

॥ इति श्री धर्मशास्तुःपञ्चरत्नं समाप्तम् ॥